चन्दनभेदः, मलयादि चन्दनमिति प्रसिद्धम्
(सुसू. ३८.८ चचि. १६.५४)
**पीतचन्दनम्**–गुणाः–तिक्तं, शीतं, हृद्यं, परं कान्तिदं कुष्ठश्लेष्मानिलापहं, कण्डूविचर्चिकादद्रुकृमिहृत् रक्तपित्तजित् (ध. ३.८ रा. १२.१५)
हिं.—पीला चंदन.
म.—**पिवळे चंदन.**
गु.—पीळो चंदन.
बं.—पीत चंदन.
फा.—संदल अबीयज.
चंदनाचा प्रकार. मलय पर्वतावरचे चंदन. पिवळे चंदन. **गुण**–कडु, थंड, कफवातनाशक, हृदयाला हितकर, अतिशय कांतिदायक, कुष्ठ, कंडू, अंग फुटणे, गजकर्ण, कृमि व रक्तस्राव कमी करते.

**कालुष्य**–न., **मलसंकीर्णत्वम्, मलिनता** (र. ८.९५)
कलुषितपणा; मळयुक्तत्व. मालिन्य.

**कालेयक**–पु., **वनस्पति० कालीयकः** (सुसू. ३९.९)
काळे अगरू.
न., **वनस्पति० दारुहरिद्रा** (इंदुः असंउ ३०; ध. १.५८)
दारुहळद.
**दारुहरिद्रानुकारि द्रव्यम्** (सुउ. ४४.३१)
दारुहळदीसारखे द्रव्य.
**कालीया काष्टं, कृष्णचंदनम्** (चसू. ३.२६)
**कालीयकः** (सुक. ६.१५) काळे चंदन.
**अगरु** (ध. ३.२७) काळा अगरु.
**कुङ्कुमम्** (रा. १२.२१) केशर.

**कालोत्थलवण**–न., **काललवणम्, सौवर्चलम्**
(चचि. १५.१७१)
योग्य काळी काढलेले लवण. पादेलोण.

**कालोपपन्न**–वि., **आवस्थिककालयोग्यम्**
(सुउ. २४.१८)
रोगाच्या अवस्थेच्या कालाला योग्य.

**कालिमकाभेदा**–स्त्री., **वनस्पति० महाकरञ्जः**
(ध. ५.११०) मोठा करंज; सागरगोटा, गजगा.

**कावीर**–**कुरुक्षेत्रात् दक्षिणदेशविशेषः सोयं कावेरीनदीपरिसरप्रदेशः संभाव्यते** (काखि. २५.१२)
कुरुक्षेत्राच्या दक्षिणेकडील देश, कावेरीनदीच्या परिसरातील प्रदेश असावा.

**काश**–पु., **वनस्पति० इक्षुरकः, श्वेतचामरपुष्पो नाम तृणविशेषः, चमरपत्रस्तृणपञ्चमूलेष्वेकः, स्तन्यजननगणे एकं द्रव्यम्** (चसू. ४.१२); **मूत्रविरेचनीयगणे एकं द्रव्यम्** (चसू. ४.१५) **काशमूलं निर्वापणप्रदेहे** (चसू. ३.२७) **वीरतर्वादिगणे एकं द्रव्यम्** (सुसू. ३८.१२) **कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः, मूत्रदोषविकारं, रक्तपित्तं च विनाशयेत्** (सुसू. ३८.७५).
**गुणाः—स्वादुर्हिमस्तर्पणो वृष्यो बलकृद्रुच्यः पित्तास्रकृच्छ्रजित्, श्रमशोषदाहहरः आमशोषक्षयापहः** (ध. ४.१३०; रा. ८.२०२)
**पित्ताश्मरीनाशनः** (सुचि. ७.९).
हिं.—कास. काही.
म.—**कसाई, कसाड.**
गु.—कांसडो.
बं.—केशेघास.
कसाई, कसाड. पांढऱ्या चवरीसारखी फुले येतात. एक गवत. तृणपंचमूळातील मूळ, कुश, कसाई, नळ, दर्भ, ऊस ही तृणपंचमुळे. **गुण**–रक्तस्राव, मूत्रविकारनाशक. आमशोष, श्रमशोष, क्षय, दाह, पित्त व रक्ताचे मूत्रदोष, शुक्र, अंगावरचे दूध वाढविणारे, रुचिकर, गोड, थंड, पोषक आहे. मूत्र विरेचक, दूध वाढविणारा, मूत्रविरेचनीय, व वीरतर्वादिगणातील एक द्रव्य. पित्ताश्मरीनाशक आहे.

**काशिपति**–पु., **धन्वन्तरिः, सर्वशास्त्रार्थतत्त्वज्ञत्वादिगुणयुक्तः काशीराजो मुनिः राजर्षिः** (सुउ. १८.३)
राजर्षि. काशीराज मुनि. धन्वंतरि. सर्वशास्त्रार्थतत्वज्ञ.
**राजर्षि० वामकः**
**यज्ञःपुरुषविषये विवदमानेषु एकः** (चसू. २५.५)
एक राजर्षि. वामक. पुरुषजन्म प्रश्नावरील वादविवादात भाग घेणारा.

**काशीराज**–पु., **वाराणसीजनपदनृपतिः, धन्वन्तरिः काशिपतिः** (सुसू. १.३)
काशीचा राजा. धन्वंतरि.

**काशीस**–न., **खनिज० कासीसम्** (चसू. ३.५)
हिराकस.

**काश्मरी**–स्त्री., **वनस्पति० 'श्रीपर्णी' 'गांभारीवृक्षः' वृक्षविशेषः, काश्मरीमूलगुणाः–तिक्तं, कटु, स्वादूष्णवीर्यं, त्रिदोषघ्नं, रक्तपित्तश्रमदाहज्वरतृष्णाविषशोफहरं च** (सुक. ६.१८; सुसू. ४६.१८५; ध. १.११७)

हिं.—खंभारी, कंभारी, शिवण.
म.—शिवण, सीवनी.
गु.—**शिवन, सीवनी.**
बं.—गांभारी, गाभार.
त.—पेरु कुमिळ, गुम्मडु तेक्कु.
गुण-कडु, तिखट, गोड, उष्ण, त्रिदोषघ्न, रक्तस्राव, दाह, ज्वर, तहान, विष, सूज, थकवानाशक.

**–पत्र**–न., **काश्मरीवृक्षस्य पत्रम्, तच्च रक्तपित्ताभ्यां दूषिते व्रणे दीयते** ( सुचि १.११३ )
शिवणीचे पान. रक्त व पित्त यांच्या दुष्टीच्या व्रणावर झाकण्याकरिता उपयुक्त.

**–फल**–न., **गाम्भारीफलम्, तद्गुणाः–हृद्यं, शीतवीर्यं, केश्यं, रसायनं, मेध्यं, रक्तसांग्राहिकं, वातनाशनं, मूत्रविबन्धघ्नं, रक्तपित्तनाशनं च** (सुसू. ४६.१८५)
**सारिवादिगणे** ( सुसू. ३८.३९ )
**गुण**-थंड; हृदय, बुद्धि, केस यांना हितकर, रसायन, रक्तस्राव कमी करणारे, गोठविणारे, वातनाशक व मूत्रप्रवृत्ति करणारे. सारिवादिगणातील एक औषध.

**काश्मर्य**–पु., **वनस्पति० काश्मरी** ( ध. १.११७ ) ( चसू. ४.१६; सुसू. ३८.६८ )
शिवण, सिवनी.
न., **काश्मर्याः इदम्** ( सुउ. ३९.१७३ )
काश्मरीचे जे ते, फळ फूल पान इत्यादी.

**( काश्मर्या )** स्त्री., **काश्मरी** ( ध. १.११७ )
शिवण, सीवनी.
**–तैल**–( परिव ) न., **तैल०, तद्गुणाः–मधुरं, कषायं, वातपित्तप्रशमनं च** ( सुसू. ४५.१२१ )
शिवण फळ घालून तयार केलेले तेल. **गुण**–गोड, तुरट, वातपित्तशामक.

**काश्मीर**–न., **वनस्पति० पुष्करमूलम्** ( ध. १.६६ )
पुष्करमूळ.
**कुङ्कुमम्** ( ध. ३.३२ ) केशर.

**( काश्मीरी )**–स्त्री., **उत्तरापथिकद्राक्षाभेदः** ( रा. ११.७७ ) **द्र० 'द्राक्षा'**
द्राक्षप्रकार.
**–ज**–न., **कुङ्कुमम्** ( रा. १२.२१ ) केशर.
**–जीरका**–स्त्री., **वनस्पति०, कृष्णजीरकः** ( ध. २.७० ) **द्र० 'जीरक'**
काळेजिरे.

**काश्मीरिका**–स्त्री., **वनस्पति० द्राक्षा** ( ध. ५.५६ )
द्राक्ष.

**काश्यप**–पु., **ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः** । ( चसू. १.१२ )
रोगनाशक उपायांचा विचार करण्याकरिता हिमालयाजवळ जमलेल्या महान ऋषींतील एक.
**–संहिता**–स्त्री., **आयुर्वेदीयकौमारभृत्यविषयकः प्रधानो ग्रन्थविशेषः, तस्य अपरं नाम वृद्धजीवकीयं तन्त्रम् । काश्यपसंहिता संपूर्णा नाद्यापि प्राप्ता । उपलब्धा चेयं त्रुटिताऽपि कौमारभृत्यविषये यावदुपलब्धग्रन्थातिरिक्तमहत्त्ववशात् प्रकाशिता दृश्यते** । ( का. )
बालचिकित्सेचा प्रधान ग्रंथ. वृद्धजीवकीय तंत्र दुसरे नाव. ही संहिता अपूर्ण आहे. अझून संपूर्ण प्राप्त झाली नाही, झाली तेवढी तरी ती अतिमहत्त्वाची असल्यामुळे प्रकाशित केली आहे.

**काश्यपोक्तविरेचन**–न., **योग० हरीतकी सलवणा मागधी मरिचानि च । दूषीविषार्तानां श्रेष्ठविरेचनम्** । ( असंउ. ४० )
काश्यपाने सांगितलेले विरेचन.
हिरडा, पिंपळी, मिरी, सैंधवयुक्त. कृत्रिम विषार्ताला चांगले रेचक.

**काषायवासिक**–पु., **सविषकीटविशेषः स सौम्यः, श्लेष्मप्रकोपणः कफविकारान् करोति** ( सुक. ८.१३ )
एक विषारी किडा. कफवर्धक व कफविकार करणारा.

**काषायी**–स्त्री., **कीट० मक्षिकाभेदः, प्राणहरा, तथा दष्टस्य कण्डूशोफदाहरुजःश्यावपिडकोत्पत्तिर्ज्वरादय उपद्रवाश्च भवन्ति । कान्तारिका, कृष्णा, पिङ्गला, मधूलिका, काषायी, स्थालिकेत्येवं षण्मक्षिकाः । तासु काषायी स्थालिका च प्राणहरे** ( सुक. ८.३५ )
**द्र० 'मक्षिका'**
माशीचा एक प्रकार. प्राणनाशक. दंशाने सूज, वेदना, खाज, आग, काळसर पुळ्या, ताप इत्यादी उपद्रव. कांतारिका, कृष्णा, पिंगलादिकातील काषायी व स्थालिका या प्राणहारक आहेत.

**काष्ठ**–न., **दारु** ( र. १. ४१ ) लांकूड.

**( काष्ठा )**–स्त्री., **कालविभाग०, पञ्चदशाक्षिनिमेषात्मकः, द्रष्टव्यं 'काल'** ( सुसू. ६.५ )
काळाचा भाग. पंधरा वेळा पापणीची उघडझांप होण्याइतका काळ.
**–कदली**–स्त्री., **वनस्पति० कदलीभेदः, रानकदली, गुणाः–मधुरा, शीता, गुरुः, मन्दाग्निजननी, दुर्जरा,**

रुच्या, रक्तपित्तहरा, विषघ्नी च। द्वितीया काष्ठकदली श्वेता। वनकदल्यपि; विषघ्नी स्वादुकदली पाषाणकदली तथा ( ध. ४.७९ )
केळीचा प्रकार. गुण–गोड, थंड, जड, पचण्यास जड, अग्नी मंद करणारी, रुचकर, रक्तस्राव व विषनाशक. दुसरी रानकेळ. काष्ठकदली, चवई.

–गोधा–स्त्री., वनस्पती. गोधाकारा ओषधिः। द्रोणीप्रावेशिकरसायनेपूपयुक्ता ( चचि. १ (४) ७ )
घोरपडीच्या आकाराची एक वनस्पती. द्रोणी-डोणीमध्ये राहून सेवन करावयाच्या रसायन गुणाची.

–जम्बू–स्त्री., वनस्पति० जम्बूभेदः, द्र० 'जम्बू' ( रा. ११.१३४ )
लहान जांभूळ. जांभळाचा प्रकार.

–दारु–न., वनस्पति० देवदारुः ( रा. १२.१०४ )
देवदार.

–द्रु–पु., वनस्पति० पलाशः ( रा. १०.२७४ )
पळस.

–धात्री–स्त्री., वनस्पति० आमलकभेदः ( रा. ११.३२९ ) द्र० 'आमलक'
लहान आवळा.

–पाटला–स्त्री., वनस्पति० पाटलाभेदः ( ध. १.१२२ ) द्र० 'पाटला'
पाडळ.

–रजनी–स्त्री., वनस्पति० दारुहरिद्रा ( ध. १.५८ )
दारुहळद.

–वल्लिका–स्त्री., वनस्पति० कट्वी ( रापरि. ३.४३ )
कटुका, कुटकी.

–सारिवा–स्त्री., वनस्पति० सारिवा ( ध. १.१६१ )
अनंतमूळ.

काष्ठक–न., वनस्पति० अगरुभेदः, काष्ठागरु द्र० 'अगरु.' ( रा. १२.४२ )
एक अगरू. लकड्या अगरू.

( काष्ठिका )–स्त्री., वनस्पति० काष्ठकदली, ( रा. ११.११० ) कठीण केळ; चवई.

काष्ठागरु–न., वनस्पति० अगरुविशेषः द्र० 'अगरु' ( रा. १२.४२ ) एक अगरू. काळा अगरू.

काष्ठालुक–न., वनस्पति० कन्दशाकम् ( सुसू. ४६.२९८ )
एक कंद, भाजी. पांढरा अळू. न शिजणारा अळू.

काष्ठीरसा–स्त्री., वनस्पति० कदली ( रा. ११.१०७ )
केळ.

काष्ठेक्षु–पु., वनस्पति० इक्षुभेदः, द्र० 'इक्षु' ( सुसू. ४५.१५३ )
उसाचा प्रकार. लकड्या ऊस. कडक ऊस. कठीण पांढरा ऊस.

काष्ठौषधि–स्त्री., वृक्षवल्ल्यादीनामौषधोपयोगि मूलत्वक्सारपुष्पपत्रादिकम् ( र. १.४१ )
वृक्ष वेली इत्यादीचे औषधोपयोगी मुळे, साल, सार, फुले, पाने इत्यादी.

कास–पु., तृणविशेषः। काशः। श्वेतचामरपुष्पः। मधुरस्तिक्तः स्वादुपाकः शीतः स्वरो मूत्रकृच्छ्राश्मरीदाहरक्तक्षयपित्तजरोगहन्ता च ( ररस. ३०.५६ )
दर्भाचा प्रकार, काश, पांढऱ्या चवरीसारखा फुलांचा झुबका असणारा. गुणः–मधुर, तिक्त, स्वादुविपाक, शीत, स्वररोग, मूत्रकृच्छ्र, अश्मरी, मूत्रदाह, रक्तक्षय, पित्तरोग नाहीसे करणारा.

कास–पु., व्याधिविशेषः। कासनिरुक्तिः–'कस गतिशातनयोः' कसनादिति यथोक्तगतिमत्त्वात् तथा उरःप्रभृतिशातनाच्च "कास" इत्यन्वर्थसंज्ञयोच्यते ( चक्र. टी. ) ( चरकचि. १८.८ ) "नेत्रे पृष्ठमुरःपार्श्वे निर्भुज्य स्तंभयंस्ततः। शुष्को वा सकफो वाऽपि कसनात् कास उच्यते॥ ( चचि. १८.८ )
निदानम्ः विदाहि-गुरु-विष्टम्भि-रूक्ष-अभिष्यन्दि-भोजनानि, शीतपान–शीतासन–शीतस्थानानि धूमानलानिलरजांसि, व्यायामकर्मभार–अध्व–वेगाघातातपतर्पणानि, आमदोष–अभिघात–स्त्री–क्षयरोग–प्रपीडनानि, विषमाशन-अध्यशन-अनशन-समशनानि, क्षवथुसंधारणम्, एतानि खलु कासस्य हिक्काश्वासयोश्च कारणानि ( सुउ. ५२.३–४ )
पूर्वरूपम्–कण्ठे कण्डूः, भोज्योपरोधः, प्राकृतिकस्वराल्पविकृतिः, अरोचकः, अग्निसादः, गलतालुशोषः, चिह्नान्येतानि भाविनि कासे भवन्ति ( सुउ. ५२.६ )
शूकपूर्णाभकण्ठत्वम्, हृदयस्य अस्वास्थ्यं च। ( असंनि. ३.२० )
सामान्यस्वरूपम्–प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः। निरेति वक्त्रात्सहसा सदोषः ( सघोषः ) कासः स विद्भिरुदाहृतस्तु ( सुउ. ५२.४ )
संभिन्नकांस्यस्वरतुल्यघोषः–
जर्जरितकांस्यशब्दानुकारी स्वरः ( ड. )

**संप्राप्तिः**—धातुक्षयावरणकारिभिः अन्यैश्च हेतुभिः क्रुद्धः अधःप्रतिहतः–प्राणः । ऊर्ध्वं रसस्य स्वस्थाने तिष्ठन्नुरसि उपपद्यते । उदानेन सज्जंस्तत्र कण्ठे चानुप्रपूर्य च । वाहिनीर्गलमूर्धस्थास्ततोऽङ्गान्युत्क्षिपन्निव । क्षिपन्निवाक्षिणी पृष्ठमुरःपार्श्वे च पीडयन् । विवृतत्वान्मुखेनैति भिन्नकांस्योपमध्वनिः । यस्मात्तस्मात्सवर्णौजोबलमांसक्षयावहः । **संख्याः**—वात–पित्त–कफ–क्षत–क्षयजः ( असंनि. ३ )

वात–पित्त–श्लेष्म–क्षत–क्षयैः पञ्च कासाः स्मृताः ( अहृनि. ३. १७–१८ )

**वातजः**—कुपितो वातलैर्वायुः उरःकण्ठवक्त्राणां शुष्कत्वम्, हृत्पार्श्वोरःशिरसा शूलम्, मोहक्षोभस्वरक्षयान् महावेगरुजास्वनं शुष्ककासं च करोति । स अङ्गानि हर्षयन् शुष्कं कफं कृच्छ्रान्मुक्त्वा अल्पो भवति ( असंनि. ३. २७–२८ ) वातकासे–सततकासवेगः भवति । ( मानि; सुउ. अ. ५२.५ )

**पित्तजः**—अक्षिकफयोः पीतत्वम्, तिक्तास्यत्वम्, ज्वरः, भ्रमः, पित्तासृग्वमनं, तृष्णा, वैस्वर्यम्, धूमकः, मदः । कासवेगेन ज्योतिषाम् दर्शनम् इव च भवति ( असंनि ३.२९ )

**कफजः**—अल्परुग् उरः, मूर्धहृदयं स्तिमितं गुरु च । कण्ठोपलेपः, सदनं, पीनसः, छर्दिः, अरोचकः, रोमहर्षः घनस्निग्धश्वेतश्लेष्मणः प्रवर्तनं च ( असंनि. ३.३० )

**क्षतजः–(तल्लक्षणम्)**·अयथाबलसेवितैः युद्धाद्यैः साहसैः अन्तःक्षते उरसि पित्तानुगतः कुपितो बली वायुः कासं करोति, तेन सशोणितं ( कफं ) पीतं श्यावं शुष्कं ग्रथितं कुथितं बहु च कफं ष्ठीवति पर्वभेदज्वरश्वासतृष्णावैवर्ण्यकम्पवांश्च भवति । कण्ठरुक्, उरसो विभिन्नत्वमिव, तीक्ष्णसूचीभिः हृदयं तुद्यमानमिव, पार्श्वशूलम् ( असंनि. ३.३१–३५ ) पारावत इव कूजनम्, सासृङ्मूत्रत्वं, पृष्ठकटीग्रहः वीर्यपक्तिरुचिबलवर्णहानिश्च जायते तथा स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् । कण्ठेन रुजताऽत्यर्थं विरुग्णेनेव चोरसा । सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना । दुःखस्पर्शेन शूलेन भेदपीडाभितापिना । पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः । पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ( चचि. १८.२१–२२ ) उरःक्षतजः कासविशेषः । उरःक्षतोद्भवः । स गात्रशूल–ज्वर–दाह–मोहान् प्राणक्षयं चोपलभेत कासी ( सुउ. ५२.१०–११ )

असाध्योरःक्षतजकासलक्षणम् । गात्रेषु शूलं ज्वरः दाहः मोहः एतल्लक्षणवान् उरःक्षतजकासी अचिकित्स्यः

**क्षयजः**—व्याधिविशेषः क्षयज इति । क्षयो धातुक्षयः, तेन राजयक्ष्मसंबंधानां क्षीणधातुपुरुषभवानां तथा जराकासस्य च धातुक्षयजस्य क्षयजशब्देन ग्रहणं भवति ( चक्रः )

वातादिजास्त्रयो ये च क्षतजः क्षयजस्तथा । पञ्चैते स्युर्नृणां कासा वर्धमानाः क्षयप्रदाः ॥ ( चचि. १८.४ ) तल्लक्षणम्–राजयक्ष्मिणः कुपिताः वातप्रधानाः धातवः राजयक्ष्मकारणैः कासं कुर्वन्ति । ततः पूतिपूयोपमं पीतं विस्रं हरितलोहितम् । कफं ष्ठीवति । पार्श्वे अपनीयेत इव । हृदयं पततीव च भवति । अकस्मात् शीतोष्णेच्छा, बह्वशित्वं, बलक्षयः, स्निग्धप्रसन्नवक्त्रत्वम्, श्रीमद्दर्शननेत्रता, सर्वाणि क्षयरूपाणि च भवन्ति ।

( असंनि. ३.३६–३९ )

**(शुक्रक्षयजकासः)**—रतिः विषयसेवनं तस्मादतिरिक्तात् शुक्रक्षयो जायते तस्मात्समुत्पन्नः कासः । प्रक्षीणमांसः दुर्बलः शुष्यन् पूयसहितं रुधिरं निष्ठीवति । वातादिकासानां हृच्छंखमूर्धोदरपार्श्वशूलीत्यादि–दोषत्रयलिंगानि अस्मिन् भवन्ति, तस्मादेष शुक्रक्षयजः दुश्चिकित्स्य इति कायचिकित्साविदः कथयन्ति । "स गात्रशूलज्वरदाहमोहान् प्राणक्षयं चोपलभेत कासी" एतत् क्षयकासलक्षणम् इति केचित् । क्षतजकासस्य असाध्यावस्थालक्षणम् इति च केचित् ॥ यद्यपि क्षयजकासलक्षणानि 'शुष्यन् विनिष्ठीवति' इत्यस्मिन् श्लोके न तादृक्–दृग्गोचरी–भवन्ति तथापि 'ससर्वलिंगम्' इत्यनेन क्षयजकासलक्षणानि ज्ञातव्यानि ।

सर्वदोषलिंगानि–क्षामाननत्वं, बलस्वरौजसां क्षीणत्वं, भिन्नस्वरत्वं, निरंतरं शुष्ककासः, हृच्छंखादिषु शूलं उरोविदाहः, ज्वरः, वक्त्रशोषः, तिक्तमुखत्वं, तृषा, कटुपीतवमनं, पीतवर्णता, परितोदाहः, सदाहकसनं, कफलिप्ताननत्वं, शिरोरुक्, कफपूर्णतनुः, अंगग्लानिः, अंगगौरवं, भोजनारुचिः, कफसान्द्रकसनं, इत्यादीनि दोषत्रयलिंगानि शुक्रक्षयजे कासे भवन्ति । क्षयस्य क्षयकासस्य च भेदो यद्यपि नोपलभ्यते तथापि क्षये यानि ज्वरादीनि लक्षणानि भवन्ति तानि एकदोषारब्धानि

साध्यासाध्यत्वं—त्रीन्साध्यान्साधयेत् पूर्वान् पथ्यैर्याप्यांश्च यापयेत् ( चचि. १८.३१ )

तस्य साध्यासाध्यत्वादि ( सुउ. ५२.१३ ) पञ्चप्रकारेषु कासेषु शक्तिमताम् अर्थात् यूनां सर्वेऽपि साध्याः; वृद्धानां अर्थात् क्षीणशक्तीनां सर्वेऽपि याप्याः । क्षतज–क्षयजौ यूनामपि दुश्चिकित्स्यौ याप्यौ च ( मा. काय० )

सामान्यचिकित्सा—शृङ्ग्यादिचूर्णम् सरामठं उष्णाम्बुना पेयम् । त्रिफलादिलेहः सितामधुसर्पिभ्यां योज्यः । पथ्यादिचूर्णम् घृतमधुभ्यां लिह्यात् । पिप्पलीचूर्णं ससैन्धवम् उष्णाम्बुना पेयम् । गुडं सपिप्पलीनागरं खादेत् । सितां द्राक्षां सकृष्णाम् अद्यात् । वंशलोचनां घृतमधुभ्यां खादेत् । धात्र्यादिचूर्णं दधिमण्डेन पिबेत् । हरेणुकां समागधीं दध्ना पिबेत् । हारिद्रादिचूर्णं सबस्तमूत्रं पेयम् । दन्त्यादिचूर्णं सुखाम्बुना ग्राह्यम् । घृतभृष्टबदरीपत्रचूर्णं ससैंधवं खादेत् । कर्षार्धप्रमाणं हिंगु सौवीरकाम्लरसाभ्यां वा पिबेत् । मरिचचूर्णम् मधुना लिह्यात् । भाङ्ग्र्यादिकृता वर्तिः धूमविषये प्रयोज्या, वंशच्छल्ल्यादिकृता वर्तिः सघृता धूमार्थं योज्या । मुस्तादिकृताः वर्तयः सपयोऽनुपानं धूमार्थं योज्याः । सीधुं मरिचान्वितं पिबेत् । निदिग्धिकादिसिद्धान् मुद्गान् मधुना खादेत् । द्राक्षादिसिद्धं शृतं क्षीरं मधुना मिश्रितं पेयम् । अधिकशुण्ठीयुक्ताम् उत्कारिकां घृते पाचयित्वा त्रुट्यादिकृतपेयां मधुमिश्रां सहोत्कारिकया पिबेत् ( सुउ. ५२.१३–२४ )

वातचिकित्सा—स्नैहिकविरेचनम्, आस्थापनम्, अनुवासनं, स्नैहिकधूमपानं, उष्णघृतपानं, यवागुः ( मांसरससिद्धा ) पयःपानम्, ( वातहरद्रव्यसिद्धपयःपानम् ) लेहाः ( सघृताः ) विशेषचिकित्सा षट्पलघृतं, विदारिगन्धादिघृतं, वासाघृतं, कल्याणगुडः अगस्त्यावलेहश्च ( सर्वकासविनाशगुणित्वात् ) ( सुउ. ५२.२६–२७ )

पैत्तिक–कास–चिकित्सा—विदारिगन्धादिघृतं शर्कराप्रक्षेपपूर्वकं पूर्वाह्णे देयं पित्तकासं हन्ति । खर्जुरादिचूर्णं सितामधुसर्पिभ्यां लिह्यात् । मञ्जिष्ठादीनि उपकुल्यान्तानि तुल्यभागानि चूर्णीकृतानि मधुना लिहेत् । आमलकस्य चूर्णं सघृतं विपक्वं क्षीरेण सह पिबेत् । काकोलिवर्गीयवगोधूमानां सुसूक्ष्मं चूर्णं मधुघृतयुक्तक्षीरेण पेयम् । गुडोदकं समरिचं सक्षौद्रं पिबेत् । कल्याणगुडं खादेत् कासश्वासाद्यनेकामयनाशनम् । अगस्त्यावलेहम् उपयुञ्जीत । काकोल्यादिघृतं कुलीरादिघृतं वा ग्राह्यम्
( सुउ. ५२.३१–४७ )

कफकास–सामान्य–चिकित्सा—वमनं विरेचनं नस्यं पिप्पल्यादिकृतम् । वैरेचनिकधूमाः । कवलग्रहाः लेहाः कटुकोष्णाः । विशोषणम् । विशेष–चिकित्सा—त्रिकटुचूर्णम् । विडङ्गसिद्धघृतम् । निर्गुण्डीसिद्धघृतम् । पाठादिघृतम् । कल्याणगुडः अगस्त्यावलेहः उभयोः अपि सर्वकासादिविनाशित्वम् ( सुउ. ५२.२८–३१ )

उरःक्षतजकासचिकित्सा—विदारिगन्धादिघृतं सशर्करं प्रातः ग्राह्यं क्षतजकासविनाशार्थम् । खर्जूरादिचूर्णम् ( खर्जूरादिभिस्तुल्यभागैः कृतं चूर्णम् ) सिताक्षौद्रघृतप्रगाढं लेह्यम् । मञ्जिष्ठादिपिप्पल्यन्तानां सप्तद्रव्याणां चूर्णं मधुना लिहेत् । आमलकचूर्णं सघृतं विपक्वं क्षीरेण सह पिबेत् । काकोलिवर्गयवगोधूमानां सूक्ष्मं चूर्णं मधुघृतयुक्तक्षीरेण पेयम् । गुडोदकं समरिचं सक्षौद्रं पिबेत् । कल्याणकगुडः उपयोज्यः कासश्वासाद्यनेकामयविनाशी । अगस्त्यावलेहश्च उपयोज्यः कासश्वासाद्यनेकामयविनाशी । काकोल्यादिघृतं चोपयोज्यम् । शतावर्यादिघृतं ग्राह्यम् ॥ पित्तकासे यानि खलु घृतादीनि भेषजानि तानि सर्वाणि उरःक्षतजकासे उपयोज्यानि । उभयोरपि तुल्यमेव चिकित्सितम् ।
( सुउ. ५२.३१–४७ )

क्षयोत्थकासचिकित्सा—विदारिगन्धोत्पलसारिवादिघृतं सशर्कराप्रक्षेपं पूर्वाह्णे ग्राह्यम् । खर्जूरादि–धान्यन्तानां सप्तद्रव्याणां तुल्यभागानां चूर्णं सिता मधु सर्पिः प्रगाढं लिह्यात् । मञ्जिष्ठादि–मागध्यन्तानां सप्तद्रव्याणां चूर्णं मधुना विलिहीत । आमलकचूर्णं सघृतं विपक्वं सह क्षीरेण पिबेत् । काकोलिवर्गयवगोधूमानां सुसूक्ष्मं चूर्णम् मधुघृतयुक्तक्षीरेण पिबेत् । गुडोदकं मरिचोपदंशं सक्षौद्रं पिबेत् । कल्याणकगुडाख्यः अवलेहविशेषः उपयोज्यः कासश्वासस्वरभेदाद्यनेकव्याधिविनाशकः । अगस्त्यावलेहः उपयोज्यः श्वासकासपाण्ड्वामयाद्यनेकव्याधिगजकेसरी । कुलीरादिघृतं काकोल्यादिघृतं शतावर्यादिघृतं चोपयोज्यम् । पित्तकासे यानि खलु घृतचूर्णादीनि भेषजानि कथितानि तानि सर्वाणि क्षयोत्थकासे

उरःक्षतजकासे च उपयोज्यानि । पित्त-क्षत-क्षयादित्रयाणामपि सामान्यं चिकित्सितम्
(सुउ. ५२.३१-४७)

**निरुक्ति**-डोळे, पाठ, छाती, व फासळ्या वाकड्या करून ताठवून कोरडा किंवा कफयुक्त ठसका सुरू होतो. ह्या स्थितीला कास म्हणजे खोकला म्हणतात.

**खोकल्याची कारणे**-विदाही, गुरु, विष्टंभी, रूक्ष, अभिष्यन्दी अशी भोजने; शीतपान, थंडीत वापर, थंड हवेत राहणे; धूम, अग्नि, वारा, धूळ इत्यादी हवेला बिघडविणारे पदार्थ; अतिव्यायाम, अतिशय भार वाहणे, अतिशय मार्ग चालणे, वेग अडविणे, आघात होणे, शरिराची झीज होणारे लंघनादि आहार विहार करणे, आमदोष, स्त्रीसंग अधिक करणे, क्षयरोगामुळे, विषमाशन, अध्यशन, अनशन, समशन करणे, शिंक अडविणे ही खोकल्याची कारणे आहेत.

**पूर्वरूप**-गळ्यामध्ये खाज, खाण्यापिण्यास अवरोध, प्राकृतिक स्वराची विकृति, चव नसणे, अग्निमांद्य असणे, गळा आणि तालु ही वाळणे, घशामध्ये कुसे भरल्यासारखे वाटणे, हृदयात अस्वास्थ्य उत्पन्न होणे.

**संप्राप्ति व सामान्यरूप**-धातुक्षयकर आणि अन्य कारणांनी प्राणवायु आणि उदान वायु दुष्ट होऊन गळ्यामध्ये ( घशामध्ये ) आघात निर्माण करतात. त्यामुळे फुटलेल्या काशाच्या भांड्याप्रमाणे बदसूर व किंचित् कफयुक्त असा आवाज घशातून निघतो; तो अचानक सुरू होतो; त्यास खोकला म्हणतात.

**त्याचे प्रकार**-१ वातज २ पित्तज ३ कफज ४ क्षतज ५ क्षयज असे पांच आहेत.

**वातज**-कुपित वायूमुळे उरामध्ये, कंठामध्ये, मुखामध्ये, शुष्कत्व उत्पन्न होते. हृदय, पार्श्व, उरोभाग व डोके यात शूळ, मोह, क्षोभ, स्वरक्षय, निर्माण होतात. मोठी उबळ व आवाजाबरोबर गळ्यामध्ये दुखावा उत्पन्न होऊन कोरडा खोकला होतो.

**पित्तज**-डोळे आणि कफ यांना पिवळेपणा असतो. तोंड कडू होते. ज्वर, भ्रम, पित्त किंवा रक्त यांची ओकारी, तहान, आवाज बसणे, गळ्यातून धूर येणे, मद, खोकताना डोळ्यापुढे तारे चमकतातसे वाटणे इत्यादी लक्षणे होतात.

**कफज**-इतर खोकल्याच्या मानाने खोकल्यात शरिराला पीडा कमी. छाती, डोके, हृदय यांना जडत्व व जखडल्याप्रमाणे वाटते. घशाला चिकटा, अंग गळणे, पडसे येणे, ओकारी, अरोचक, अंगावर रोमांच उभे राहतात घट्ट - स्निग्ध - पांढऱ्या कफाचे प्रवर्तन होते.

**क्षतज**-अयोग्य तऱ्हेने केलेल्या लढाई वगैरे साहसी कृत्यामुळे फुप्फुसादी अवयवात अंतःक्षते निर्माण होतात. पित्तानुबंधि कुपित वायु त्या ठिकाणी आघात करून खोकला निर्माण करतो; त्या खोकल्याबरोबर सरक्त, पिवळा, काळा, शुष्क, गाठाळ, कुजलेला, बऱ्याच प्रमाणात कफ पडतो. पेरांचा भेद, ज्वर, श्वास, तृष्णा, वैवर्ण्य असे परिणाम होतात. यामुळे कंठामध्ये पीडा, उरामध्ये फुटल्यासारखे, तीक्ष्ण सुईमुळे हृदयात टोचल्यासारखे वाटते, बरगड्यामध्येहि शूळ उत्पन्न होतो, पारवा जसा कूं कूं आवाज करतो त्याप्रमाणें गळ्यात आवाज होतो. सरक्त मूत्रप्रवृत्ति होते. पाठ आणि कंबर जखडते, शुक्र, पचनक्रिया, चव, बल, वर्ण यांची हानि होते.

**क्षयज**-धातुक्षयाने किंवा राजयक्ष्मा वगैरे रोगामुळे क्षीणधातु झालेल्यांना तसेच म्हातारपणामुळे जो धातूंचा क्षय होतो त्यामुळे हा क्षयज-खोकला उत्पन्न होतो. वातप्रधान त्रिदोषामुळे हा खोकला होतो. त्यामध्ये दुर्गंधयुक्त, पिवळा, आंबूस, हिरवा, लालसर असा कफ पडतो; बरगड्या तुटल्यासारख्या वाटतात; हृदय पडल्यासारखे वाटते; एकाएकी उष्ण किंवा थंडाची इच्छा होते; खादाडपणा वाढतो; बलाचा ऱ्हास होतो; चेहरा आणि डोळे मात्र प्रसन्न दिसतात; सर्व क्षयाची चिन्हे उत्पन्न होतात.

**शुक्रक्षयज कास**-अतिमैथुनामुळे शुक्रक्षय होऊन हा विकार उत्पन्न होतो. क्षीण मांस, दुर्बलता, शरीर सुकत जाणे, खोकल्यातून पू व रक्त ही पडते, त्रिदोषाची चिन्हे होतात. वातकास प्राधान्याची ही हृदय, आंख, डोके, उदर, बरगड्यात शूळ इ० लक्षणे केव्हा केव्हा होतात. म्हणून हा त्रिदोषात्मक विकारापेक्षाहि अधिक तीव्र व बरा न होणारा खोकला आहे असे म्हटले जाते.

**सर्वदोषांची खोकल्यात उत्पन्न होणारी चिन्हे**-चेहरा गळून जाणे, बल, स्वर आणि ओज यांचा क्षय होणे, आवाज फुटणे, सारखा कोरडा खोकला, हृदय-शंख इत्यादी मर्मांचे ठिकाणी शूळ, छातीत दाह, ताप, तोंड सुकणे, तोंड कडू होणे, तहान, तिखट पिवळी ओकारी होणे, शरीर पिवळे पडणे, खोकताना सर्वत्र दाह उत्पन्न होणे, क्षयाची

चिन्हे आणि क्षयकासाची चिन्हे यांमध्ये जरी फारसा भेद नसला तरी क्षयातील त्या चिन्हांची सुरुवात एकदोषाने होते. परंतु क्षयकासातील चिन्हांची सुरुवात त्रिदोषाने होत असते.

**खोकल्याचे साध्यासाध्यत्व**—पहिले तीन साध्य—शक्तिमान माणसाला पांचहि खोकले साध्य आहेत. क्षीण शक्तीचे आणि वृद्ध यांना सर्वच याप्य आहेत. क्षत—क्षयामुळे होणारे तरुणांनाही असाध्य आहेत.

**सामान्य चिकित्सा**—शृंग्यादि चूर्ण हिंग घालून गरम पाण्याबरोबर प्यावे. त्रिफलादि लेह खडीसाखर, मध, तूप, यांबरोबर घ्यावा. पथ्यादि चूर्ण तूप मधाबरोबर चाटावे. पिंपळीचे चूर्ण सैंधव घालून गरम पाण्याबरोबर घ्यावे. गूळ, पिंपळी व सुंठ एकत्र करून खावीत. खडीसाखर द्राक्षे पिंपळी ही खावीत. वंशलोचन तूपमधातून चाटावा. धात्र्यादि चूर्ण दह्याचे निवळीबरोबर घ्यावे. हरेणुका आणि पिंपळी दह्याबरोबर प्यावी. हरिद्रादिचूर्ण बकऱ्याचे मूत्राबरोबर प्यावे. दन्त्यादीचूर्ण साध्या कोमट पाण्याबरोबर प्यावे. तुपावर भाजलेली बोरीची पाने सैंधव घालून खावीत. अर्ध्या तोळयापर्यंत हिंग सौवीर-काम्लाबरोबर प्यावा. मिरपूड मधाबरोबर चाटावी. भारंगीची केलेली वात किंवा वांवूचे छिलके यांपासून केलेली वात तूप, मध घालून धूम्रपानासाठी घ्यावी. मुस्तादिकांची केलेली वात तूप घालून धूम्रपाना-साठी वापरावी. सीधु नावाचे मद्य मिरपूड घालून प्यावे. निदिग्धिकादि काढ्यात सिद्ध केलेले मूग मधाबरोबर खावेत. द्राक्षादिकांनी सिद्ध केलेले दूध मध घालून प्यावे. सुंठ घातलेली भाकरी तुपात परतून त्रुट्यादींच्या पेयात मध घालून त्याबरोबर प्यावी.

**वाताची चिकित्सा**—स्नैहिक विरेचन, आस्थापन व अनुवासन वस्ती, स्नैहिक धूम्रपान, उष्ण घृतपान करणे, मांसरसामध्ये सिद्ध केलेली यवागू, वातहर द्रव्यांनी सिद्ध केलेले दूध प्यावे. तूप घातलेले लेह चाटावे.

**विशेष चिकित्सा**—षट्पलघृत, विदारिगंधादि-घृत, वासाघृत, कल्याणगुड, अगस्त्यावलेह ही घ्यावीत.

**पित्तजकासचिकित्सा**—भुईकोहळ्याने सिद्ध केलेल्या तुपात साखर घालून ते सकाळी घ्यावे. खर्जूरादिचूर्ण खडीसाखर, मध, तूप यांचेबरोबर चाटावे. मंजिष्ठादिचूर्ण मधाबरोबर चाटावे. आमलकीचे चूर्ण तुपात शिजवून दुधाबरोबर प्यावे. काकोल्यादिवर्ग, यव, गहू यांचे सूक्ष्म चूर्ण मध, तूप युक्त दुधावरोबर प्यावे. गुळाचे पाण्यात मिरपुड आणि मध टाकून प्यावे. कल्याणकगुड खावा. अगस्त्यावलेह चाटावा. काकोल्यादिघृत किंवा कुलीरादिघृत घ्यावे. **कफजकास सामान्य चिकित्सा**—वमन, विरेचन, नस्य, वैरेचनिक धूम, कवलग्रह, तिखट आणि उष्ण लेह. **विशोषण विशेष चिकित्सा**—त्रिकटुचूर्ण, विडंगसिद्ध तूप, निर्गुण्डीसिद्धघृत, पाठादिघृत, कल्याणकगुड, अगस्त्यावलेह.

**उरःक्षतज कासचिकित्सा**—विदारीगंधादि घृत साखर घालून सकाळी प्यावे. खर्जूरादिचूर्ण खडिसाखर, मध तूप बरेच घालून चाटावे. मंजिष्ठादिचूर्णांतील पहिली सात चूर्णे मधाबरोबर चाटावी. आवळकठी तुपावर परतून दुधाबरोबर घ्यावी. काकोली, यव, गहू यांचे सूक्ष्म चूर्ण मध, तुप युक्त दुधावरोबर घ्यावे. गुळाचे पाणी मिरी आणि मध घालून प्यावे. कल्याणकगुड, अगस्त्याव-लेह, काकोल्यादिघृत, शतावर्यादिघृत घ्यावे. पित्त-कासामध्ये जी जी घृते सांगितली आहेत ती सर्व यांमध्ये घ्यावी. त्या दोघांची चिकित्सा सारखीच आहे.

**क्षयोत्थकासचिकित्सा**— विदारिगंधोत्पलसारी-वादिघृत साखर घालून सकाळी घ्यावे. खर्जूरादी चूर्णांतील पहिली सात औषधे तूप, मध, खडी-साखरेबरोबर चाटावी. मंजिष्ठादिचूर्ण मधाबरोबर चाटावे. आमलकी चूर्ण तुपात शिजवून दुधाबरोबर प्यावे. काकोली, यव, गहू, यांचे सूक्ष्म चूर्ण, मध, तूपयुक्त दुधाबरोबर प्यावे. गुळाचे पाणी मिरीं, मध घालून प्यावे. कल्याणकगुड, अगस्त्यावलेह, कुलीरादि, काकोल्यादिघृत, शतावर्यादिघृत घ्यावे. पित्तकासमध्ये जी घृते, चूर्णे, औषधे सांगितली आहेत ती सर्व क्षयोत्थकासामध्ये घ्यावी. व उरः-क्षतकासामध्येही घ्यावी. कारण पित्तकास, क्षतकास आणि क्षयकास ह्यांची चिकित्सा सारखीच आहे.

**कासघ्न**—पु., वनस्पति० **बिभीतकः** (रानि. ११.३२३ पृ. ५१.) बेहेडा.

**—वर्ग—कासघ्नगणः द्राक्षाऽऽमलकपुनर्नवावृश्चीवदुरालभाऽभयाकृष्णाः कासं घ्नन्ति सशृङ्गी तामलकी कण्टकारी च** (असंसू. १५.३६)

कासनाशक गण. द्राक्षे, आवळा, पुनर्नवा, वसु, पित्तपापडा, हिरडा, पिंपळी, काकडशिंगी, काटेरिंगणी.

**कासघ्नी**–स्त्री., **वनस्पति० भार्ङ्गी**
( धनि. १.६८ पृ. २० ) भारंगी.
**वनस्पति० कण्टकारीविशेषः**
( धनि. १.९८ पृ. २५ ) काटेरिंगणी.

**कासचिकित्सित**–न., **अध्याय० कासचिकित्सानिरूपणार्थं कृतः अध्यायः** ( चचि. १८.१ )
या नावाचा अध्याय. यात खोकल्याची चिकित्सा आहे.

**कासनाशनरस**–पु., **भैषज्य० ताम्रलोहाभ्रकभस्मानि कासमर्दागस्त्यत्रिफलाऽम्लवेतसरसैः परिमर्दितो जायते** ( ररस. १३.२८ )
या नावाचे सिद्ध औषध. ताम्र, लोह, अभ्रकभस्माला कासमर्द, अगस्त्य, त्रिफला, अम्लवेतस, यांच्या भावना देऊन तयार केलेले.

**कासनाशिका**–स्त्री., **वनस्पति० त्रिवृद्भेदः रक्तत्रिवृत्**
( रानि. ६.३६९ पृ. ५७–५८ )
तांबडे निशोत्तर.

**कासप्रतिषेध**–पु., **अध्याय० कासाभिधव्याधिविशेषचिकित्सा। कासप्रतिषेधाख्यः सुश्रुतस्य उत्तरतंत्रस्थः द्विपंचाशत्तमोऽध्यायः** ( सुउ. ५२.१–२ )
या नावाचा सुश्रुतसंहिता उत्तरतंत्रातील अध्याय.

**कासप्रसंग**-पु., **सततकासः। शोषे उरःक्षतस्य कारणम्**
( चनि. ६.१० )
एकसारखा खोकला लागणे. राजयक्ष्म्यामध्ये यानेच उरःक्षत होते.

**कासमर्द**–पु., **वनस्पति० कासमर्दकः**
( धनि. ४.११८ पृ. १५७ )
**प्रसिद्धः पत्रशाकविशेषः, 'कासविंद' इति लोके तद्गुणाः–मधुरः कफ-वातघ्नः पाचनः कफशोधनः विशेषतः पित्तहरः सतिक्तश्च** ( सुसू. ४६.२३६ )
हिं.—कसौंदी, कासिंदा.
म.—**कासिंदा, कासविंदा.**
गु.—कासोंदरी.
बं.—कालकासुंद.
त.—पोन्नाविरै, पैयाविरै.
**अस्य यूषः हिक्काश्वासनिवारणार्थम् उपयुक्तः**
( चचि. १७.९९ )
कासमर्द, कासविंदा. **गुण**–मधुर, कफवातनाशक; पाचन, कफशोधन, विशेषें करून पित्तहरत्व अधिक. याचे कढण उचकी व श्वास नाहींसे करण्यास उपयोगी पडते. थोडा कडु आहे.

**–क**–पु., **वनस्पति० कासमर्दः**
( सं. कासचि. अ.४. पृ. २२ ) कासविंदा.

**कासमर्दन**–पु., **वनस्पति० पटोलम्**
( रानि. ३.७४ पृ. १७ ) कडुपडवळ.

**कासमुक्तिद्**–पु., **वनस्पति० पटोलम्**
( धनि. १.५० पृ. १७ ) कडुपडवळ.

**कासरगुग्गुलु**–पु., **महिषाक्षकः। गुग्गुलुविशेषः कासरः महिषः ( वैशसिं ) उदरव्याधौ उपयुज्यते**
( असंचि. १७.९६ )
म्हशागुग्गुळ, उदर व्याधीमध्ये देण्यास योग्य.

**कासरोधज**–रोग० **तत्र कासहा विधिः कार्यः**
( अहसू. ४.१३ )
खोकल्याच्या अवरोधाने होणाऱ्या रोगांवर त्यांवरीलच चिकित्सा.

**कासहर**–( गणः ) **महाकषायवर्गे एकः गणः**
( चसू. ४.१६ )
**कासघ्नः पञ्चके महाकषायवर्गे एको गणः**
( चसू. ४.८ )
पाच महाकषायवर्गातील एक कासघ्न गण.

**कासहरी**–स्त्री., **वनस्पति० कासमर्दः कण्टकारी, भार्ङ्गी वा** ( ररस. १२.४८ )
कासमर्द, काटेरिंगणी, भारंगमूळ ही कासहर द्रव्ये होत.

**कासारि**–पु., **वनस्पति० कासमर्दः**
( धनि. ४.११ पृ. १५७ )
कासमर्द, कासविंदा.

**कासालु**–पु., **वनस्पति० स्वनामख्यातः कासालुः कासकन्दश्च०.........।**
( रानिपरि. ७ वर्ग २८ पृ. ३४९ )
**"खंवरे आलु" इति। कोंकणदेशे**
बं.–खाम् आलु.
म.–**कासाळु, कासाळूचा कांदा.**

**कांसिका**–स्त्री., **वनस्पति० मुद्गपर्णी** ( रा. ३.१७५ )
रानमूग.

**कासी**–स्त्री., **खनिजद्रव्य० सौराष्ट्री, तुवरी**
( रानि. १३.१६४ पृ. ११६ ) तुरटी. सौराष्ट्री.

**–कन्द्**–पु., **वनस्पति०, कासालुः**
( रानिपरि. ७ वर्ग २८. पृ. ३४९ ) कासाळू.

**कासीस**–तुत्थकः, भस्मसदृशं किंचिदम्लं लवणरसं च। व्रणशोधनकल्कतैलघृतेपु उपयुज्यते ( सुसू. ३७.१६ )

तुत्थक, भस्मसदृश किंचित आंबट, लवणरस असणारे, व्रणशोधन कल्क, तेल, तुपामध्ये उपयोगात आणतात.

, उपधातुविशेषः, हिराकस इति लोके ( सुचि. ९.५५ )

उपधातुविशेष. हिराकस असेही म्हणतात. ( चचि. २१.१२६ र. २.१०५ )

**–किट्ट**–न., कासीसत्वक्, त्वक् नाम उपरितनो भागः ( इंदुः असंउ. २८ )

किट्ट. त्वक् म्हणजे वरचा भाग. पापुद्रा.

**–द्वय**–न., कासीसस्य द्वौ भेदौ; एकं पांशुधातुसंज्ञम्, अपरं पुष्पकासीसाख्यम् ( अहसू. १५.२३ )

दोन प्रकार. एक पांशु धातु. दुसरा पुष्पकासीस नांवाचा.

**–बद्ध**–पु., पारदयोग० पारदः कासीसयुक्तः पारदः पलमात्रं पंचगुणेन कासीसेन युतम् अर्जुनत्वग्–रसेन प्रहरमात्रं मर्दयित्वा शरावसंपुटस्थं वराहपुटेन पचेत्। अनुपानं–शाणमात्रबाकुचीचूर्णं मधु च। मात्रा वल्लम्। समयः मासत्रयम्। श्वित्रं दद्रु च नाशयति ( र. २०.१७८–१८० )

हिराकसाने बांधलेला पारा. हिराकसाशी संयुक्त झालेला पारा. पाऱ्याचा एक योग. पारा ४ तोळे पाचपट हिराकस ( २० तोळे ) घेऊन एकत्र खलून अर्जुनसादड्याच्या रसाने एक प्रहर खलून शरावसंपुटात वराहपुटाने पक्व करावे. ४ मासे बावचीच्या चूर्णात मध घालून त्यातून एक वाल प्रमाणाने तीन महिने घ्यावे. कोड व दाद नाशक.

**–प्रकाराः**–एकं भस्मसदृशं, किंचिदम्लं, लवणरसं, द्वितीयं पुष्पकासीसम् ईषत्पीतं तुवररसम् ( सुसू. ३८.३७ )

वालुकासीसं पुष्पकासीसं च ( र. ३.५५ )

गुणाः–कषायम्, अम्लम्, उष्णम् ( शिशिरं, रा. ) चक्षुष्यं, कान्तिवर्धनं, वातकफघ्नं, विष-नेत्ररुक्-श्वित्रकुष्ठव्रणघ्नं, खर्जूकृमिहरं कचरंजनं च ( ध. १२३ )

उष्णकारिगणे ( सुसू. ३८.३७ ) व्रणेषु उत्सन्न-मांसेषु मांसस्फोटनार्थमुपयुज्यते ( सुसू. ३७.३१ ) दद्रुप्रमुखत्वग्रोगेषु अवचूर्णनार्थमुपयुज्यते ( चसू. ३.१० ) लेपार्थम् उपयुक्तम् ( चचि. २१.१२६ )

शोधनम्–सकृद् भृङ्गाम्बुना क्लिन्नं कासीसं निर्मलं भवेत्। कासीसं शुद्धिमाप्नोति पित्तैश्च रजसा स्त्रियः॥ ( र. ३.५९ )

सत्वपातनविधिः–क्षाराम्लमर्दितं ध्मातं कासीसं सत्वं मुञ्चति ( र. ३.६१ )

उपरसांपैकी एक. प्रकार २. खाणीतला हिराकस. भस्मासारखा, किंचित आंबट व थोडा खारट. दुसरा पुष्पकासीस थोडासा पिवळा व तुरट रसाचा. त्यांना अनुक्रमे वालुकासीस व पुष्पकासीस म्हणतात. **गुण**–तुरट, आंबट, उष्ण (थंड) डोळ्याला हितकर, शरिराची कांति वाढविणारा, वातकफनाशक, विषघ्न, कृमि, खरूज, दाह, कुष्ठ, कोड, व्रणनाशक, डोळ्याचे विकारनाशक आणि केस काळे करणारा. व्रणात मांसाची वाढ अधिक होते, ती नाहीशी करणारा गजकर्णादि त्वचारोगांवर भुरभुरण्यासाठी उपयुक्त व लेपाकरिता ही योग्य. **शोधन**–माक्याच्या रसात शिजविले ( भिजविले तरी ) तसेच पित्त, स्त्रियांचे रज यानेही शुद्ध होते. क्षार व आंबट गण यांनी एकत्र भट्टीत फुंकले की सत्त्व निघते.

**कांस्य**–न., कृत्रिमधातु० भागाष्टकपरिमाणताम्रेण द्विभागेन वङ्गेन च विद्रुतेन कांस्यं भवेत्, पुष्पतैलिकभेदेन द्विविधं कांस्यम्, सौराष्ट्रभवं कांस्यमुत्तमम ( र. ५.२१२–२१५ ) तद्गुणाः– सतिक्तं ( सु. ) कषायानुरसं ( असं. ) उष्णं ( ध. ) विशदं रूक्षं लघु ( असं. ) सरं ( भाप्र. ) लेखनं चक्षुष्यं ( सु. ) रुच्यं दीपनपाचनं वृष्यं बल्यं च ( ध. ) कफवातजित् (सु.) पित्तापहम् ( असं. ) ( सुसू. ४६.३२८ ) ( असंसू. १२ ध. ६.२३ ) बस्तिनेत्रनिर्माणे एतदुपयुज्यते ( चसि. ३.७ )

**–नील**–पु., न., कांस्यापमार्जनमसी ( सुउ. ५४.३६ ) कांस्यमसी कफार्बुदे मूत्रेण सह लेपार्थमुपयुज्यते ( सुचि. १८.३६ )

काशाचे भांडे दिव्यावर धरून लागलेले काजळ. कफार्बुदावर मूत्रातून लेप.

**–भाजन**–न., कांस्यपात्रम्। जलपानार्थमुपयुज्यते ( सुसू. ४५.१३ ) एतस्मिन्दशरात्रपर्युषितं सर्पिर्नाश्नीयात् ( सुसू. २०.१४ )

काशाचे भांडे, पाणी पिण्याकरिता.

या भांड्यात दहा दिवस ठेवलेले तूप खाऊ नये.

**–मल**–पु., न., **भैषज्यद्रव्य० नेत्ररोगेष्वञ्जनार्थमुपयुज्यते** ( सुउ. १२.१३ ) **तीक्ष्णाञ्जनदुर्बलस्य नेत्रस्य प्रत्याश्वासनार्थमुपयुज्यते** ( सुउ. १२.५० )
काशाच्या मळाचे अंजन, नेत्ररोगावर उत्तम.

**–रजस्–भैषज्यद्र० नेत्ररोगेषु वर्तिनिर्माणे उपयुज्यते** ( असंउ. १९ )
काशाचे काजळासारखे सूक्ष्म व मऊ चूर्ण. नेत्ररोगांसाठी सळईकरिता उपयुक्त एक औषधी द्रव्य; अंजनासाठी.

**–विमल**–न., **खनिज० विमलभेदः** ( धपरि. ६.७ )
माक्षिकाचा एक प्रकार.

**कांस्याक**–न., **खनिज० कांस्यम्** ( ध. ६.२३ ) कासे.

**कांस्यापमार्जनमसी**–स्त्री., **कांस्यापमार्जनस्योल्लेखननीलिका, दीपस्योपरि अर्धाच्छादिते कांस्यभाण्डे संलग्ना लेखनेन संगृहीता मसी** ( सुउ. १८.१०३ )
दिव्यावर भांडे धरून लागलेले काजळ.

**कांस्याभ**–वि., **आपाण्डुपीतम्** ( सुउ. ७.३० ) **सितम्** ( सुउ. ४.९ ) काशासारखे. पांढरट पिवळट.

**काहल**–पु., **वाद्यविशेषः** ( र. ६.१४ ) नगारा, कर्णा.

**किंशुक**–पु., **पलाशः** ( ध. ५.१६१ )
न., **पलाशपुष्पम्** ( सुसू. ४६.२८८ )
( असंसू. ७.१२५–१२६ ) पळस. पळसाचे फूल.

**–क्षार**–पु., **क्षार० पलाशक्षारः** ( चचि. १(३)–१५ )
क्षार, पळसाचा क्षार, पळसाचा खार.

**–तैल**–न., **पलाशतैलं, पित्तश्लेष्मप्रशमनम्** ( असंसू. ६.१११ )
पळसाच्या फळांचे–बियांचे तेल. पित्तकफनाशक.

**–फल**–न., **पलाशवृक्षफलम्; जन्तुप्रमेहनुत्, रूक्षोष्णं कटुकं पाके लघु वातकफापहं च** ( सुसू. ४६.१९७ )
पळसाचे फळ. शेंग, रूक्ष, उष्ण, तिखट, पचल्यानंतर हलकी, वातकफनाशक, जंतुनाशक, प्रमेहनाशक.

**–भस्मन्**–न., **पलाशपुष्पभस्म, कृष्णमूषिकदंशे शिरीषफलं कुष्ठं च पलाशभस्मोदकेन सह पिबेत्** ( सुक. ७.१३ )
पळसाचे भस्म. फुलाचे भस्म. उंदराच्या दंशावर सिरसाची बी, कोष्ठकोळिंजन पळसाच्या भस्माच्या पाण्याबरोबर प्यावे.

**किंशुकोद्भव**–वि., **पलाशोद्भूतम्** ( असंसू. ६.१११ )
पळसापासून केलेले, झालेले.

**किक्कस**–पु., किक्किसः ( असंचि. १९ )
पहा 'किक्किस'.

**किक्किश**–पु., **शोणितजकृमि० अदृश्योऽयं कृमिः दुश्चिकित्स्यो न त्वसाध्यः** ( सुउ. ५४.१५ )
रक्तज एक कृमि. हा कृमि अदृश्य आहे. रोग असाध्य नाही पण उपचाराला त्रासदायक.

**किक्किस**–पु.,न., **लक्षण० चर्मविदरणम्** ( चशा. ८.३२ ) **ऊरुस्तनोदरेषु वलिविशेषा रेखाकाराः प्रायो गर्भिण्यवस्थायां ये जायन्ते ते किक्किससंज्ञाः । रेखास्वरूपस्त्वक्संकोचः** ( चशा. ८.३२. असंशा. ३.९ )
चामडी विरते. विरल्यासारखी दिसते. लहान लहान ओरखड्याचे पट्टे, कातडी विरलेली व सुरकुत्या असलेली. बहुधा गर्भिणीच्या मांड्या, जांघ, ओटीपोट स्तन यांवर खाजविले की ओरखड्याच्या वळ्या होतात. नखोडे.

**किक्किसाद्**–पु., **राजिमान्, सर्पविशेषः द्र० 'सर्प'** ( सुक. ४.३४.(३)
पट्टे असलेला साप.

**किक्विस**–न., **किक्विस** ( अहृशा. १.५८ )
नखोडा. नखोला.

**किङ्कर**–पु., **भृत्यः** ( अहृसू. २८.२८ ) चाकर.

**किङ्किणी**–स्त्री., **वनस्पति० विकङ्कतः** ( ध. ५.४३ )
बेहळी, बेहकळ, आंबट द्राक्ष, कटौंली.

**किङ्किराट**–पु., **वनस्पति० किङ्किरातः** ( ध. ५.१५६ )
बाभूळ, अशोक, काळी कोन्हांटी.

**किङ्किरात**–पु., **वनस्पति० सहचरविशेषः, पीतसहचरगुणाः–कषायः, तिक्तः, उष्णः, दीपनः, कफवातघ्नः, शोफकण्डूतिरक्तदोषत्वग्दोषघ्नः** ( रा. १०.४१५ )
हिं.—कटसरैया, पियावासा.
म. **पिवळा कोरंटा, तांवडा कोरंटा, निळा कोरंटा.**
गु.—कांटा अशेलीयो, पीळां फुल, राता फुलनो.
बं.—झाँटी, कुलझाँटी, पितझाँटी, नीलझाँटी, लालझाँटी.
ता.—शेमुळळी.
कोन्हांटी प्रकार. पिवळी कोन्हांटी. **गुण**–तुरट, कडु, उष्ण, अग्निदीपक, कफवातनाशक, सूज, खाज, रक्तदोष, त्वचेचे दोषनाशक.

**किञ्ज**–न., **वनस्पति० पद्मकेसरः** ( ध. ४.१६५ )
कमळाचे केशर.

**किञ्जल्क**–पु., केशरः केसरो वा, पुष्पतन्तुः पद्मोत्पलकुमुदानाम् । **गर्भस्थापनार्थम् उपयुज्यते** ( चशा. ८.२४ )
**अञ्जनद्रव्यम्** ( सुउ. १७.११ )
केशर. केसर. फुलांचे तंतु. तांबडे, निळे, पांढरे, कोणत्याही कमळाचे केसर. गर्भ रहात नसल्यास त्याकरिता उपयोगी. अंजनाचे एक द्रव्य.
न., **पद्मकेसरः** ( ध. ४.१६५ )
कमळाचे केशर.
**नागकेसरः** ( रा. ६.७३ ) नागकेशर.

**किटिकिटापयन**–न., लक्षण० 'किटिकिट' इति दन्तध्वनिविशेषः ( चसि. ६.७२ )
किटकिट. दांत कटकट वाजणे–वाजविणे.

**किटिभ**–न., रोग० **क्षुद्रकुष्ठम्** ( चसू. ३.७ ) **हस्तिचर्मवत् श्यावं किण खरस्पर्शं परुषं चर्म यत्र भवति (मा)प्रसारणीयोऽयं रोगः** ( सुसू. ११.७ )
**चिकित्सा–किटिभे सरलपीतदारुशिंशपागुरुसारस्नेहाः उपयुज्यंते** ( सुचि. ३१.५ )
क्षुद्रकुष्ठ. हत्तीच्या चामड्या सारखे काळे, खरखरीत घट्टयासारख्या स्पर्शाचे कठीण कातडे होते. हा रोग पसरतो. **चिकित्सा**–दोन्ही देवदार, शिसव, अगरू यांच्या गाभ्याचे चूर्ण आणि तेल उपयुक्त.
पु., कीट० **श्लेष्मप्रकोपणः सौम्यः सविषकीटविशेषः** ( सुक. ८.१३ )
एक किडा. कफप्रकोपी, सौम्य विषारी.

**किटिम**–न., रोग० **किटिभम्** ( चचि. ७.२९ ) एक रोग.

**किटिमार**–पु., वनस्पति० **हंसपादी** ( र. २०.१३ )
किडामारी.

**किट्ट**–न., **मलः** ( र. २.३४ )
मळ. निरुपयोगी अंश. फेकून देण्याचा पदार्थ.
**मूत्रपुरीषादिस्वरूपो मलः** ( चचि. १५.१५ )
मळ, मूत्र इत्यादी शरिरातील बाहेर टाकण्याचे पदार्थ.
**असारभागः । तत्र आहारप्रसादाख्यो रसः किट्टं च मलाख्यम् । अन्नधात्वादिकिट्टं, यथा–अन्नस्य विण्मूत्रं, रसस्य कफः, असृजः पित्तम्, मांसस्य खमलः, मेदसः स्वेदः, अस्थ्नः केशलोमनखाः, मज्ज्ञः अक्षित्वग्विशां स्नेहः, शुक्रस्य ओजः** ( चसू. २८.४ ) ( चचि. १५.१५ ) **द्र० 'मल.'**
आहाराचा प्रसादरूप भाग म्हणजे रस व मलरूप भाग किट्ट होय.
उदा० केसांचा परिपोषक अंश. आहारातील प्रसादरूप म्हणजे रस; व किट्ट म्हणजे मळ. अन्नाचे विष्टा व मूत्र; रसाचा कफ, रक्ताचे पित्त, मांसाचे नाक कान इत्यादी पोकळ अवयवांमधले मळ. मेदाचा घाम, हाडांचे केस, लव, नखे, मज्जेचे डोळा, त्वचा व मळ यांवरील स्निग्ध द्रव्य–चरबी–तेलकट अंश. शुक्राचे ओज हे मळ होत.
**लोहमलः, मण्डूरः** ( र. ९.६२ )
लोखंडाचा मळ, मंडूर.
**लोहोच्छिष्टम्** ( **मण्डूरः** ) ( ध. ६.३५ )
लोखंड तापल्यानंतर वर सुटलेला लोखंडाने बाहेर टाकलेला अंश.

**किण**–पु., **व्रणस्थानम्** ( चचि. ७.२२ )
व्रणाची जागा. वण.

**किणिही**–स्त्री., वनस्पति० **अपामार्गः** ( ध. १.२६० चवि. ७.२१ ) आघाडा.
**कटभी** ( चसू. ४.११ ( १५ ) ( सुसू. ३९.६ रापरि. ९.३७ )
मालकांगोणी. विष्णुक्रांता.
**नीलस्यन्दा** ( सुउ. ५.७५ ) तिवस.

**किण्व**–न., **सुराबीजम्, सुराकांजिकाद्यधःस्थितद्रव्यम्** ( सुसू. ३७.२१ ) ( चसू. १४.३५ ) **शोथपाचनम्** ( सुसू. ३७.९ ) **व्रणेपूत्सन्नमांसेष्ववसादनार्थमुपयुज्यते** ( सुसू. ३७.३१ ) **उपनाहस्वेदे उपयुक्तम्, विशेषतः उदररोगे** ( असंचि. १७ )
दारू; कांजी यांच्या तळाशी सांठलेला साका. दारूचे बी–बीज. सुजेचे पचन करणारे, व्रणातील वर आलेले मांस खाली जावे याकरिता उपयुक्त होते. पोटिसाने शेकण्याला उपयुक्त. विशेषतः उदररोगात.

**किण्वाहि**–स्त्री., **किणिही** ( **श्वेतस्यंदः** ) ( सुउ. ६१.२३ )
एक वनस्पती. पांढरा तिवस.

**किण्वोदकपिष्टसमवाय**–पु., **सुराबीजोदकतण्डुलपिष्टानां संयोगः । अन्योन्यगुणानुप्रवेशाद्यथा किण्वोदपिष्टानामुद्रेको भवति तथा दुष्टहेतूनां समवाये वातादीनामुद्रेको भवति** ( सुसू. २१.२८ )
तांदुळाचे पीठ, पाणी व दारूचे बी यांचा संयोग. या द्रव्यांच्या एकत्रीकरणाने परस्परांच्या अग्नीने पचन सुरू होते व ते फसफसतात. उद्रेक होतो, तसेच शरिराला दुष्ट करणारी कारणे शरिरात एकत्र आली की वातादी दोष उफाळतात.

**कितव**–पु., वनस्पति० धत्तूरः ( ध. ४.७ ) धोत्रा.
चोरकः ( ध. ३.७१ ) चोरओवा.

**किन्नर**–पु., देवयोनिविशेषः ( चचि. २१.३ )
एक देवयोनि.

**किप्य**–पु., पुरीषजक्रिमिविशेषः ( सुउ. ५४.८ )
मळातला एक क्रिमि, किडा,

**किंपाक**–पु., वनस्पति० कारस्करः ( रापरि. ९.३५ )
कुचला.

**कियन्तःशिरसीय**–पु., अध्याय० ( चसू. १७.१ )
एका अध्यायाचे नाव. डोके, हृदय इ. मुख्य मर्मांचे व काही रोगांचे वर्णन असलेला.

**किरात**–पु., विन्ध्याचलसमीपवर्ती कश्चन देशविशेषः। 'तप्तकुण्डं समारभ्य समक्षेत्रान्तिकं शिवे। किरातदेशो विज्ञेयो विन्ध्यशैलेऽवतिष्ठते॥' इत्येवं शिवशक्तिसंगमतन्त्रोक्तत्वात् ( र. २.७९ )
विंध्याद्रीमधला एक भाग. विंध्यपर्वताजवळचा एक देश. शिवशक्तिसंगमतंत्रात हे सांगितले आहे. दुसरे मत–आसामातील टिमा.

**–तिक्त**–पु., न., वनस्पति० गुणाः–तिक्तः शीतो लघुर्वातकरः कफपित्तघ्नो रक्तविकृतिशोफकासतृष्णाज्वरघ्नः व्रणरोपणः कुष्ठकण्डूतिनाशनः ( ध. १.३३ असंसू. १५.२३ ) पाण्डुरोगशमनार्थमुपदिष्टम् ( सुउ. ४४.२५ )
हिं.—चिरायता.
म.—**किराईत, काडेचिराईत.**
गु.—करियातु.
बं.—चिरेता.
त.—चिरायत्तु, किरायत्तु,
फा.—नेनिहाद.
गुण.—कडु, थंड, हलका, वातकर, कफपित्तनाशक, रक्ताचे विकार, सूज, खोकला, तहान, ज्वरनाशक, व्रणरोपक, कुष्ट, खाजनाशक, पांडुरोगनाशक.

**–तिक्तक**–पु., न., वनस्पति० किराततिक्तः भूनिम्बः ( सुसू. ४६.२६२; चसू. ४.१२ )
काडेचिराईत, किराईत.

**–तिक्तकतैल**–न., तैल० मधुरं, मधुरविपाकं, वातपित्तप्रशमनं, शीतवीर्यमभिष्यन्दि, सृष्टमूत्रमग्निसादनं च ( सुसू. ४५.१२० )
हे काडेचिराइताचे तेल गोड, पचनानंतरहि गोड. वातपित्तनाशक, थंड, ओलावा निर्माण करणारे, अग्निमांद्य करणारे व मलमूत्रसारक.

**किरातक**–पु., वनस्पति० किराततिक्तः ( ध. १.३६ )
काडे चिराईत.

**किरीटिन्**–पु., वनस्पति० अर्जुनः ( ध. ५.११४ )
अर्जुनसादडा.

**किलाट**–पु., क्षीरकूर्चिकापिण्डः कूर्चिकीभूतक्षीरस्य घनभागः, यं लोकाः क्षीरांशुमित्याहुः, सूदास्तु किलाटीति, तद्गुणाः–गुरुः कफवर्धनः वातघ्नः पुंस्त्वनिद्राप्रदः तर्पणो बृंहणश्च
( सुसू. ४५.९१; सुसू. ४६.४०९; चसू. २७.२३४ ) दुधात आंबट घातल्यानंतर दूध फाटते. फाटलेल्या दुधातील जाडसर घट्टसा भाग. याला लोक क्षीरांशु व आचारी किलाटी म्हणतात. खर्वस. छाना. **गुण**–जड, कफ वाढविणारा, वातनाशक, झोप आणणारा, पोषक, पौष्टिक व पुरुषत्वदायक.
मुद्गः ( ध. ६.८१ ) मूग.

**किलास**–न., रोग० कुष्ठभेदः, श्वित्रं, श्वित्रकुष्ठं वा इति अपरपर्यायौ ( चसू. २६.१०९ ); इदं त्वग्गतमेव अपरिस्रावि च ( सुनि. ५.१७ ) तत्र हेतुः–' वचांस्यतथ्यानि कृतघ्नभावो निन्दा गुरूणां गुरुधर्षणं च। पापक्रिया पूर्वकृतं च कर्म हेतुः किलासस्य विरोधि चान्नम् ॥' ( चचि ७.१७७ ); प्रायशः किलासं त्रिदोषजम्; दोषे रक्ताश्रिते रक्तवर्णम्; मांससमाश्रिते ताम्रम्; मेदःश्रिते च श्वेतं भवति ( चचि. ७.१७४ ) स्थानसंश्रयः चतुर्थी ताम्रा नाम या त्वक् सा विविधकिलासकुष्ठाधिष्ठाना ( सुशा. ४.४ ) तृतीया त्वक् इति चरकसंहितायाम् ( चशा. ७.४ ) वातात् रूक्षारुणं रक्ताश्रयं च; पित्तात् कमलपत्रवत् ताम्रं सदाहं रोमविध्वंसि मांसाश्रयं च; कफात् श्वेतं घनं गुरु सकण्डु मेदोधात्वाश्रयं च। ( अहृनि. १४.३८ ); श्वित्रं द्विविधं दोषजं व्रणजं च तत्र मिथ्योपचाराद्धि व्रणस्य व्रणजं स्मृतम् ( मा. भोजः ) साध्यासाध्यत्वम्–अशुक्लरोम, अरक्तरोम, असंश्लिष्टं, तनु, नवं, नातिचिरोत्थितम्, अनग्निदग्धजं, मध्यावकाशे उच्छूनं यत् श्वित्रं तत् साध्यं उच्यते। यत् गुह्यपाणितलौष्ठेषु जातं वर्षगणोत्पन्नं, परस्परतः अभिन्नं, बहुलं च तत् श्वित्रं नैव सिध्यति ( चचि. ७.१७५; अहृनि. १४.४० )
कुष्ठाचा प्रकार. कोड, हे त्वचेतच असते आणि स्राव न होणारे असते. याची कारणे–नेहमी निरर्थक बोलणे, गुरूंची निंदा, त्यांच्याशी भांडण, कृतघ्नता, पापे

व पूर्वकर्मे तसेच विरोधी अन्न खाणे, रंगभेद–प्रायशः कोड त्रिदोषांचे रक्तात दोषदुष्टि असेल तर रक्तासारखे तांबडे, मांसात दोष असेल तर तांब्यासारखे तांबडे, मेदात दोष असेल तर पांढरे. **स्थान**–सुश्रुतमताने ताम्रा ४ थी व चरक मताने ३ री त्वचा नानाप्रकारच्या किलास कुष्ठाचे अधिष्ठान आहे. दोष–**वाताने** रूक्ष काळसर लाल व रक्ताश्रित होते, **पित्ताने** कमळाच्या पाकळीसारखे तांबडे, आग असलेले व लव नाहीशी करणारे मांसाश्रित होते. **कफाने** पांढरे, जाड, जड, खाजयुक्त मेदोधातु दुष्टीने होते. **आणखी प्रकार**–दोषज व व्रणज. चुकीच्या ( शरिराला न मानवणाऱ्या ) आहारविहाराने होणारे ते दोषज व व्रणाने होते ते व्रणज. **साध्यासाध्यत्व**–निरनिराळ्या ठिकाणी होऊन एकमेकांना येऊन न भिडलेले, पातळ, नवे, थोड्या दिवसांचे, तांबडे किंवा पांढरे केस न झालेले, मध्ये व बाजूला उतरते आणि अग्नीने जळून न झालेले साध्य. जननेंद्रिय व हातापायाच्या तळव्यावरचे ओठावरचे अनेक वर्षांचे एकमेकात मिसळलेले, जाडसर मुळीच साध्य होत नाही.

**किलिञ्ज**–पु., न., **आस्तरणविशेषः, कटः** ( सुचि. ३२.७ ) तट्टया, हातरी, चटई.
**देवनलः** ( सुचि. ३२.७ ) बोरू.
**काष्ठपट्टिका** ( सुचि. ३२.११; ( असंचि. २१ ) पातळ फळी. तक्ता.
**वंशादित्वग्ग्रथितपेटिकाकारः** ( सुसू. १०.४ ) दुरडी, परडी, करंडी, रोळी, टोपली, संबळ, कुरकुला.

**किलिञ्जक**–पु., **आस्तरणविशेषः, कटः** ( चवि. ७.२२ ) चटई. हातरी,

**किलिम**–न., वनस्पति० देवदारुः ( चक. ७.१५ ध. १.७६ ) देवदार.

**किल्विष**–न., दोषः, रोगः ( सुचि. २८.७ ) दोष, रोग.

**किष्कु**–पु., स्त्री., मान०, हस्तः ( चवि. ८.११ ) माप.

**किसल**–पु., किसलयः, पल्लवः ( र. ३०.५६ ) पान. कोमल पाने, पालवी. कोमल अंकुर.

**कीचक**–पु., वनस्पति० वंशः ( ध. ४.१३७ ) पोकळ वेळू, देवनळ, बांबू, टोकर.
**नलः** ( रा. ८.२२१ ) नळ, देवनळ.
**–वेणुः**–पु., वाद्य० सुषिरवंशस्य वेणुः ( असंशा. १२.८ ) एक वाद्य. पोकळ वेळूचे वाद्य. पावा. बासरी, अलगुज.

**कीचकाह्वय**–पु., वनस्पति० वंशः ( रा. ७.२१६ ) बांबू, वेळू, देवनळ, टोकर,

**कीट**–पु., सूक्ष्मदेहः प्राणी, मशकपिपीलिकादिः क्रिमिः सविषक्रिमिणा रोगोत्पत्तिर्मरणं वा भवति ( चचि. २३.१४ )
विषकीटो वृश्चिकादिः, उत्पत्तिः–सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसंभवाः वाय्वग्न्यम्बुप्रकृतयः कीटाः संभवन्ति ( सुक. ८.३ ) वायव्याग्नेयसौम्यसंकीर्णभेदेन चतुर्विधाः कीटाः भवन्ति ( असंउ. ४३ )
सामान्यविषलिङ्गम्–सविषविषप्राणिदंशे सामान्यलक्षणम्–कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदोपशोषणम् । विदाहरागरुक्पाकाः शोफो ग्रन्थिनिकुञ्चनम् । दंशावदरणं, स्फोटाः कर्णिका, मण्डलानि, ज्वरश्च; विपरीतं तु निर्विषे ॥ ( चचि. २३.१७८ ) अम्बुप्रकृतयः ( कफप्रकृतयः सौम्या वा ) कीटाः तेषां नामानि विश्वंभरः, पञ्चशुक्लः, पञ्चकृष्णः, कोकिलः, सैरेयकः, प्रचलको, वलभः, किटिभः, सूचीमुखः, कृष्णगोधा, काषायवासिको, गर्दभस्रोटक इति त्रयोदश कीटा भवन्ति, श्लेष्मप्रकोपिणां मध्ये विश्वंभरप्रचलककृष्णगोधाकाषायवासिकांश्चतुरो वर्जयित्वा नवान्ये मुखसंदंशविषा वर्तन्ते ( सुक. ८.१२ )
चतुर्विंशत्यग्निप्रकृतयः कीटाः तेषां नामानि–कौण्डिन्यकः, कणभको, वरटीपत्रो, वृश्चिको, विनासिका, ब्राह्मणिका, बिन्दुलो, भ्रमरो, बाह्यकी, पिच्चिटः, कुम्भी, वर्चकीटोऽरिमेदकः, पद्मकीटो, दुंदुभिको, मकरः, शतपादकः, पञ्चालकः, पाकमत्स्यः, सूक्ष्मतुण्डो, गर्दभी, क्लीतः, कृमिशरारी, उत्क्लेशकश्च पित्तप्रकोपणानां मध्ये कौण्डिन्यकवरटीभ्रमरपिच्चिटवर्चःकीटमकरशतपदपञ्चालकपाकमत्स्यकृष्णतुण्डान् विहाय शेषाश्चतुर्दश मुखसंदंशविषा वर्तन्ते ( सुक. ८.८ ) वायव्यः–अष्टादशवायव्याः कीटास्तेषां नामानि–कुम्भीनसस्तुण्डिकेरी, शृंगी, शतकुलीरकः । उच्चिटिंगोऽग्निनामा, चिच्चिटिंगो, मयूरिका । आवर्तक उरभ्रः सारिकामुखः, वैदलः, शरावकुर्दोऽभीराजिः, परुषश्चित्रशीर्षकः, शतबाहू, रक्तराजिश्च । वातप्रकोपणानां कुम्भीनसादीनां मध्ये शृंग्युच्चिटिंगशरावकुर्दचित्रशीर्षकान् वर्जयित्वा शेषाश्चतुर्दश मुखसंदंशविषा वर्तन्ते ( सुक. ८.५ ) सर्वदोषप्रकृतिः–द्वादश सर्वदोषप्रकृतिकाः कीटाः

तेषां नामानि–तुङ्गीनासो, विचिलक–स्तालको, वाहकः, कोष्ठागारी, क्रिमिकरो, मण्डलपुच्छकः, तुण्ड ( ङ्ग ) नामः, सर्षपिको, वल्गुली, शंबुकोऽग्निकीटश्च । तैर्दष्टानां सर्पवत् वेगज्ञानानि भवन्ति । तास्ता वेदनास्तीव्रा सान्निपातिका रोगाश्च भवन्ति । दंशः क्षाराग्निदग्धवत् रक्तपीतसितारुणश्च । सर्वदोषप्रकृतिकानां मध्ये वाहकसर्षपशंबूकान् वर्जयित्वा नव मुखसंदंशविषा वर्तन्ते ( सुक. ८.१६ ) श्लेष्मप्रकृतिकीटविषस्य लक्षणानि छर्दिररोचकम्, हृल्लासः, प्रसेकः, उत्क्लेशः, पीनसम्, मुखमाधुर्यम्, शरीरे शैत्यम् । तत्र चिकित्सा श्लेष्माधिकं विषं लेखनच्छेदनस्वेदनवमनैर्जयेत् । अग्निप्रकृतिकीटविषस्य लक्षणानि–संज्ञानाशः, उष्णनिःश्वासौ, हृद्दाहः, कटुकास्यता, मांसस्यावदरणं ( व्रणमुखात् मांसस्य खण्डशः पतनम् ) शोफो, रक्तपित्तम् । तत्र चिकित्सा–पैत्तिकविषं शीतलैः स्पर्शवीर्ययोः शीतैः सेकैः प्रलेपैश्च शमयेत् ( असंउ. ४३ ); वातप्रकृतिकीटविषस्य लक्षणानि–हृत्पीडा, ऊर्ध्वश्वासः, स्तंभः, सिरायामोऽस्थिषु पर्वसु च रुक्, घूर्णनमुद्वेष्टनम्, गात्रश्यावता च । तत्र चिकित्सा–पिण्याकेन दंशव्रणे लेपः तैलेन अभ्यंगः । नाडीपुलाकाद्यैः स्वेदो, बृंहणोपक्रमः कर्तव्यः ( असंउ. ४३ ) उग्रविषैः कीटैर्दष्टे सर्पवत् समुपाचरेत् ( सुक. ८.४२ ); कर्णस्रोतःप्रविष्टे कीटे लक्षणानि–तोदो गौरवं भरभरायणं स्पन्दमाने चाऽभ्यधिकं वेदना । तत्र चिकित्सा–सलवणेनाम्बुना मधुसुक्तेन मद्येन वा सुखोष्णेन पूरणम्, निर्गते च कीटे तदुत्सर्जनम् । तत्रैव तु मृते पाककोथक्लेदा भवन्ति । तेषु कर्णस्रावोक्तं कुर्यात्प्रतिनाहोक्तं च

( असंसू. ३७.२५ )

किडा. लहान शरिराचा प्राणी. डास, मुंगी इत्यादी. क्रिमि विंचु इत्यादी विषारी किड्यांनी रोग होतात. किंवा मरण. सर्पाच्या शुक्र विष्ठा मूत्र प्रेत व कुजकी अंडी यापासून वात पित्त कफ प्रकृतीचे किडे उत्पन्न होतात हे तीन प्रकार व मिश्र धरून चार प्रकारचे किडे असतात. **सविष निर्विष दंश सामान्य लक्षणे**–दंशाची जागा चरणे, लाली, सूज, वेदना, फोड पिकणे, खाज, टोचणी, वर्ण बदलणे, स्पर्श न कळणे, ओलावा सुकणे, जळजळ, गाठी, गोल चकंदळे आणि ज्वर. ही विषारी किड्याच्या दंशाने होतात. बिनविषारी दंशाने या उलट चिन्हे असतात. सौम्य ( अम्बु–कफप्रकृतीच्या ) किड्यांची नावे वर दिलेल्या तेरांपैकी विश्वंभर प्रचलक कृष्णगोधा काषायवासिका हे सोडून बाकी नऊ तोंडाने विषारी दंश करतात. चोवीस पित्त ( अग्नि ) प्रकृतीचे किडे वर दिले आहेत, त्यांपैकी कौंडिण्यक वरटी भ्रमर पिच्चिट वर्चःकीट मकर शतपद पंचालक पाकमत्स्य कृष्णतुंड सोडून बाकीचे चौदा तोंडाने विषारी दंश करणारे आहेत. वातप्रकृतीच्या अठरा किड्यांपैकी शृंगी उच्चिटिंग शरावकुर्द चित्रशीर्षक यांना सोडून बाकी चौदा तोंडाने विषारी दंश करतात. सर्वदोष–त्रिदोष प्रकृतीचे बारा कीटक आहेत. नावे वर आहेत. ते चावले तर सर्पविषवेगांप्रमाणे त्याचे वेग समजावे. त्या त्या तीव्र वेदना, त्रिदोषज रोग होतात. दंश, क्षार किंवा अग्नीने जळाल्यासारखा लाल, पिवळा, पांढरा, काळसर, लाल असतो. यामध्ये वाहक, सर्षप, शंबूक सोडून बाकी ९ तोंडाने विषारी दंश करणारे. **लक्षणे**—कफप्रकृति किड्याच्या दंशाने वांती, तोंडाला पाणी सुटणे, घशाशी येणे, आतून गुळण्या येणे, रुची नसणे, पडसे, तोंड गोड असणे आणि शरीर थंड असणे. **चिकित्सा**–दंश खरडणे, कापणे, घाम काढणे व ओकारी देऊन जिंकावे. अग्निप्रकृति किड्याच्या दंशाने व्रणातील मांस चरणे व मांसाचे तुकडे पडणे. सूज, रक्तस्राव, तोंड तिखट, छातीत आग, गरम निःश्वास व बेशुद्धि.

**चिकित्सा**—थंड स्पर्शाची वीर्याची औषधे द्यावी; अशांचाच लेप व त्यांचे काढे शिंपडावे. रेचक द्यावे. **वातप्रकृति किड्यांच्या विषाची लक्षणे**—हृदयात वेदना, श्वास वर लागणे, अंग ताठरणे, अंग दुखणे, हाडे व पेरी यात वेदना, शिरा ताणल्या सारख्या वाटणे व गरगर फिरल्यासारखे वाटणे आणि अवयवांना काळेपणा. **उपचार**–दंशाच्या व्रणावर पेंडेचा लेप, तेलाचे अभ्यंग, नळीतून वाफेने व पोटिस इत्यादींनी शेकणे, पौष्टिक औषधे देणे. उग्रविषावर सर्पविषाप्रमाणे उपचार. कानात किडा गेला तर टोचणी, जडपणा, भरभर फडफड आवाज होणे, किड्याच्या हालण्याने अधिक वेदना. **चिकित्सा**–ऊन अशा सैंधवयुक्त पाण्याने, मद्याच्या शिरक्याने, दारूने कान भरावा. किडा निघाल्यावर हे काढून टाकावे. किडा तेथेच मेला तर

कान पिकतो, सडतो आणि वाहतो. त्यात कर्णस्राव व प्रतिनाह यात सांगितलेली चिकित्सा करावी.

**–कल्प**–पु., अध्याय० ( सुक. ८.१ ) **कीटविषविज्ञानीयः कल्पः । कीटविषभेषजकल्पनात् सुश्रुतसंहितायां कल्पस्थाने अष्टमोऽध्यायोऽयम्** ( सुक. ८.१ )

अध्यायाचे नाव. किड्यांच्या विषाचे ज्ञान, किड्याच्या विषावर द्यावयाच्या औषधांची कल्पना असलेला सुश्रुतसंहितेतील कल्पस्थानाचा ८ वा अध्याय.

**–घ्न**–पु., खनिज० गन्धकः ( रा.१३.१६७ ) खाणीतला गंधक.

**–दष्ट**–न., कीटदंशः । **अनुग्रविषदष्टे तीव्रार्तिर्भवति । उग्रविषदष्टे तु मन्दार्तिरिति । तथा च दंशो नातिभिन्नो नात्युन्नतोऽतिव्यथायुक्तश्च भवति** ( सुक. ८.४१ )

किड्याचा दंश. उग्र विषारी किड्याच्या दंशात मंद पीडा पण सौम्य विषारी किड्याच्या दंशात तीव्र पीडा होते. तसेच उग्र विषारी दंशात व्रणात थोड्या वेदना, सूज व व्यथा असते.

**–दष्टव्रण**–पु., कीटविषोत्थव्रणविशेषः । **तत्र चिकित्सा—दुष्टव्रणवत् कार्या** ( सुक. ८.१३५ ) किड्याने दंश केल्याने त्या विषाने झालेला व्रण. दुष्ट व्रणाच्या चिकित्सेसारखी चिकित्सा.

**–मर्द**–पु., पारदयोग० **पारदगन्धकाजमोदाविडङ्गविषमुष्टिपलाशबीजानि एकद्वित्रिचतुःपंचषड्भागिकानि चूर्णयित्वा मधुना निष्कमात्रं लेह्यानि तदुपरि च मुस्तायाः क्वाथः पेयः कृमिनाशनोऽयं योगः** ( र. २०.२४४ )

पारा, गंधक, अजमोदा, वावडिंग, कुचला, पळसाचे बी ही क्रमाने एक दोन तीन चार पाच सहा भाग प्रमाणात चूर्ण करून मधाबरोबर एक तोळा लेह चाटावा. वर नागरमोथ्याचा काढा प्यावा. हा कृमिनाशक योग आहे.

**–मारी**–स्त्री., वनस्पति० हंसपादी ( रा. ५.१६६ ) लाल लाजाळू.

**–विष**–न., कीटस्य विषम् ( सुक. ३.३१ ) किड्याचे विष.

**–शत्रु**–पु., वनस्पति० विडङ्गम् ( सुउ. १२.४४ ) वावडिंग.

**–संमत**–वि., कीटसदृशः ( चचि. २३.१४० ) किड्यासारखा.

**कीटारि**–पु., वनस्पति० विडङ्गम् ( र. २६.४८ ) वावडिंग.

**कीरप्रियः**–पु., वनस्पति० निम्बः ( र. १३.६८ ) निंब.

**कीरवर्णक**–न., वनस्पति० स्थौणेय ( रा. १२.१२५ ) गाजर, गंठीवन.

**कीरी**–स्त्री., पत्रशाक० **इयमार्द्रभूमौ प्रसरणशीला** ( र. ११.१२९ )

एक पानभाजी. ही ओल्या जमिनीत पसरते.

**शुकस्त्री** ( र. ११.१२९ ) मैना.

**कीरेष्ट**–पु., वनस्पति० निम्बः ( रा. ९.४३ ) निंब.

**अक्षोटः** ( ध. ५.६० ) अक्रोड.

**आम्रः** ( ध. ५.१ ) आंबा.

**जलमधूकम्** ( रा. ११.५९ )

लांब पाने, लहान फुले व गोड फळे असणारा वृक्ष.

**कीर्ण**–वि., अवचूर्णितम् ( सुसू. ४४.८५ ) विखुरलेले, वर भुरभुरलेले.

**( कीर्णा )**–स्त्री., गुण्डिता ( सुचि. २.४६ ) चूर्ण, भस्म, चूर्णभस्म चोपडलेली.

**–पुष्प**–पु., वनस्पति० मोरटः ( ध. १.१५ ) शेण्या खैर, एक प्रकारचा मोरवेल, उसाचे मूळ.

**कीर्णाङ्ग**–वि., व्याप्तम् अङ्गं यस्य, **अङ्गाश्रयं रिष्टं लक्षणम् आह यः पांसुनेव कीर्णाङ्गो योऽङ्गे घातं न वेत्ति वा** ( असंशा. १०.१० )

हे त्वचेच्यासंबंधी मरणसूचक चिन्ह आहे. व्यापलेले अंग ज्याचे तो. धूळ सर्व अंगावर पडली आहे असे म्हणतो किंवा अंगावर झालेला आघात ज्याला समजत नाही तो निश्चित मरणार.

**कीर्तनी**–स्त्री., वनस्पति० नीलिनी ( ध. १.२३३ ) काळा दाणा.

**कील**–पु., रोग० **मांसप्रदोषजरोगेष्वेकः, अर्शांसि** ( चसू. २८.१४ )

एक रोग. मांसदुष्टीच्या रोगांपैकी एक. मूळव्याध, खीळ, मोड.

**यन्त्र० शङ्कुः, तत्र स्वस्तिकयन्त्राणि अष्टादशांगुलप्रमाणानि मसूराकृतिभिः कीलैरवबद्धानि अस्थिविदष्टशल्योद्धरणार्थमुपदिश्यन्ते** ( सुसू. ७.१० )

एक यंत्र. शंकु, एक स्वस्तिक यंत्र. १८ अंगुळे लांब व मसुरीसारख्या खिळ्यांनी पक्के केलेले, हाडामध्ये रुतलेले शल्य काढण्याला उपयुक्त.

